श्री लक्ष्मीहयग्रीवाय नमः

श्रीमदानन्दतीर्थभगवत्पादाचार्यगुरुभ्यो नमः

# ॥ श्री पद्यमाला ॥

मङ्गळाचरणम् —

ॐ प्रणम्य श्रीपतिं सर्वान् गुरूंश्चाथ प्रवक्ष्यहम् ।
यथामति हरेः पूजाविधिं वैष्णवसम्मतम् ॥१॥
आदौ देवगृहे न्यस्य कलशान् सप्त पञ्च वा ।

तुलसीपुष्पाद्याहरणम् —

आहरेत्तुलसीं दूर्वां पुष्पाण्यद्यतनानि च ॥२॥
यथाकालोपपन्नानि स्वारामवनजान्यपि ।

वर्ज्यपुष्पाणि —

अक्रीतान्यप्रदत्तानि चौर्याल्लब्धानि यानि च ॥३॥
शूद्राहृतानि वा भूमौ पतितानि तथैव च ।
एरण्डार्कजपत्रेषु चाहृतानि करे तथा ।
पटाहृतानि यानि स्युर्वर्जयेत्तानि यत्नतः ॥४॥
अर्घ्यपाद्यादिसम्भारान् यथाशक्ति विधाय च ।

हरिवेश्मसमीपगमनम् —

प्रक्षाल्य पाणी पादौ चाप्याचम्य हरिवेश्मनः ॥५॥

पूर्वे नमो जयायाथ विजयायाथ दक्षिणे ॥ ६ ॥
श्रियै बलाय प्रबलायाथ प्रत्यक् श्रियै नमः ॥ ७ ॥
नन्दायाथ सुनन्दाय श्रियै च कुमुदाय च ।
कुमुदाक्षायोत्तरे च द्वारपालांश्च पूजयेत् ॥ ८ ॥

कवाटोद्घाटनम्, देवगृहप्रवेशश्च —

तदनुज्ञामवाप्याथ "वायवायाहि दर्शत"[1] ।
अनेन वायुमन्त्रेण समुद्घाट्य कवाटकम् ॥ ९ ॥
कृत्वा तालत्रयं द्वारे देहलीमस्पृशन्विशेत् ।

दीपोद्दीपनम् —

दक्षीणाङ्घ्रिं पुरस्कृत्य "ह्यग्निनाग्निः समिध्यते"[2] ॥ १० ॥
अनेन वह्निमन्त्रेण दीपानुद्दीपयेत्ततः ।

भूतोच्चाटनम् —

ईक्षया पुष्पक्षेपेण पार्ष्णिघातत्रयेण च ।
दिव्यन्तरिक्षभूमिष्ठान्विघ्नानुच्चाटयेत्सुधीः ॥ ११ ॥
"अपसर्पन्तु ये भूता" इति मन्त्रं पठन्नपि ।
भूतानुच्चाट्य नाराचमुद्रया बन्धयेद्दिश्म् ॥ १२ ॥

मानुषगन्धनिरसनम् —

अपैवेत्यादि येभ्यश्च[3] एवापित्र[4] ऋचौ पठेत् ।
निवार्य मानुषं गन्धमेभिर्मन्त्रैस्तु पूजकः ॥ १३ ॥

जवनिकाकल्पनम् —

कल्पयित्वा जवनिकां देवमात्मानमन्तरा ।

ब्रह्मपारस्तवपाठः —

[1] ऋग्वेद १.२.१
[2] ऋग्वेद १.१२.६
[3] ऋ १०.६३.३
[4] ऋ ४.५.६

आरुह्य वेदिकां पश्चाद् ब्रह्मपारस्तवं पठेत् ॥ १४ ॥

घण्टावादनम् —

"आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ।
कुरु घण्टारवं तत्र देवताह्वानलाञ्छनम्" ॥ १५ ॥
अज्ञानाज्ज्ञानतो वाऽपि कांस्यघण्टां न वादयेत् ॥ १६ ॥
राक्षसानां पिशाचानां तद्देशे वसतिर्भवेत् ।
तस्मात्सर्वप्रयत्नेन घण्टामावादयेत्ततः ॥ १७ ॥

जवनिकात्यागः, निर्माल्यविसर्जनम् च —

ततो जवनिकां त्यक्त्वा निर्माल्यं विसृजेत्ततः ।

स्नानादिपात्रस्थापनम् —

स्नानपात्रं तथा पीठं यथास्थानं निधाय च

मण्टपध्यानम्, भूतोच्चाटनम्, आसनम् च —
सौवर्णं मण्टपं ध्यायेद्धेमरत्नोपमण्डितम् ॥ १८ ॥
अध्यासितासने स्वस्थोऽ "पक्रामन्त्वि" ति पूर्वकान् ।

भूतोच्चाटनम् —

मन्त्रानुदीर्य भूतानि मुद्रया छोटिकाख्यया ॥ १९ ॥

आसनदेवताः, आसनमन्त्राश्च —

उत्साद्यासनमन्त्रेण पृथिवीं प्रार्थयेत्ततः ।
आसने मण्डले चेन्दोः कूर्मस्कन्धेऽहमास्थितः ॥ २० ॥
कल्पयित्वेत्थमासीनो व्याहरेत् "भूर्भुवःस्वरोम्" ।
इत्यासनमुपस्पृश्य मण्डूकाय नमस्ततः ।
कूर्मायाथ वराहाय शेषायाथ नमस्ततः ॥ २१ ॥
नमः कालग्निरुद्राय वज्राय च नमो नमः

मन्त्रोच्चारणक्रमः —

सानुस्वारं चाधिवर्णं प्रणवादिमुदीर्य च ।
नमोन्तमिति चैतेषु षट्कं चैव जपेद्बुधः ॥ २२॥
उक्तेषु वक्ष्यमाणेषु स्तानेष्वन्येषु सर्वशः ।
पूजाविधौ च देवानां पीठावरणयोर्वदेत् ॥ २३॥
तत्तन्नां चतुर्थ्यन्तं प्रणवादि नमोऽन्तकम् ।

दिग्बन्धनम् —

ततोऽस्त्राय पडित्युक्त्वा दिशो बध्वेषुमुद्रया ॥ २४॥

वह्निध्यानम् —

प्राकारावस्थितं वह्निं ध्यात्वा मुद्रां सुदर्शनीम् ।
दर्शयेदथ चैन्द्रादिदिक्षु बध्नामि चाष्टसु ॥ २५॥
नमश्चक्राय स्वाहेति मन्त्रमेनमुदीरयेत् ।

पूजासङ्कल्पः —

ततस्तिथ्याधि सङ्कीर्त्य स्थितं देशं च सम्स्मरन् ॥ २६॥

सङ्कल्पमन्त्रः —

“अनन्तकल्याणगुणैकसिन्धुश्रीविष्णुना प्रेरितमानसोऽहम् ।
तस्यैव वीर्येण बलेन तेजसा सञ्जीवितस्वान्तवपुश्चिदिन्द्रियः ॥ २७॥
प्रीत्यर्तमस्यैव करोमि पूजाविधिं प्रदिष्टं खलु तन्त्रसारे ।
ब्रह्माण्डसाहस्त्रपतेर्दयालोर्भक्त्या यथाशक्ति यथैव सम्पत्” ॥ २८॥

करशोधनम् —

वाय्वग्निवरुणानां च बीजानि यरवाः क्रमात्
प्रत्येकं सम्पुटीकृत्य प्रणवेन च बिन्दुना ॥ २९॥
एभिः कार्यं क्रमात्षोढा करसन्धिषु शोधनम् ।

गुरुवन्दनम् पापपुरुषनिरसनं च —

ततः सर्वान् गुरून्नत्वा हृत्पद्माधिष्ठितं प्रभुम् ॥ ३०॥

सुषुम्नामार्गतो नीत्वा विनिदध्यात्स्वमूर्धनि ।
ततश्च ब्रह्महत्येति ध्यायेत्स्वं पापपूरुषम् ॥ ३१ ॥
आनीय नाभिदेशे तं वायुबीजेन शोषयेत् ।
हृद्यग्निबीजतो दग्ध्वा भस्म वामनसा त्यजेत् ॥ ३२ ॥
वारुणेनाथ बीजेन शिरस्थामृतधारया
प्लावयेत्सर्वगात्राणि कृत्वाऽऽत्मानं ततो हृदि ॥ ३३ ॥

प्राणायामः, तत्त्वयासादि —

प्राणायामं ततः कृत्वा तत्त्वन्यासाम्स्ततः परम् ।
मातृकान्यासकान्कृत्वा प्राणानायम्य मूलतः ॥ ३४ ॥

अष्टाक्षरमन्त्रजपः —

अष्टाक्षरन्यासपूर्वं ध्यात्वो द्यन्नास्वदित्यथ ।
पूजाङ्गमिति मूलं च जपेदष्टोत्तरं शतम् ॥ ३५ ॥
पुनश्चाक्षरविन्यासं कृत्वा ध्यायेद्धरिं पुनः ।

देवप्रार्थना, प्रार्थनामन्त्राः च —

ततः कृताञ्जलिर्भूत्वा निषुसीदेत्यृचं पठेत् ॥ ३६ ॥
आराध्यसे प्राणभृतां प्रणेत्रा प्राणाधिनाथेन समीरणेन ।
नारायण ज्ञानसुखैकपूर्ण स्वामिन्मम श्रीरमण प्रसीद ॥ ३७ ॥
बिम्बोऽसि प्रतिबिम्बोऽस्मि तव यद्यपि चान्तरम् ।
स्वामिन् निर्दोष मद्दोषं विरे चय नमोऽस्तु ते ॥ ३८ ॥
भगवन्यन्मया कर्म शुभं कारयसि प्रभो ।
तत्सर्वं विष्णुपूजाऽऽस्तु तव देवप्रसादतः ॥ ३९ ॥
सम्प्रार्थ्यैवं स्वबिम्बास्थं मुद्रया प्रार्थनाख्यया ।

कलशपूजा, कलशदेवताः —

कलशं पूजयेत् पश्चादाह्वयेद्देवताशतम् ॥ ४० ॥
मातृका एकपञ्चाशच्चतुर्विंशतिमूर्तयः ।
केशवाद्यास्तथा विश्वतैजसप्राज्ञतुर्यकाः ॥ ४१ ॥
आत्मान्तरात्मपरमज्ञानात्मा वासुदेवकः ।
सङ्कर्षणश्च प्रद्युम्नोऽनिरुद्धो मत्स्यकच्छपौ ॥ ४२ ॥
क्रोडो नृसिंहः सवटू जामदग्न्यरधूद्वहौ ।

वासिष्ठयादवौ कृष्णावात्रेयौ बुद्धकल्किनौ ॥ ४३॥
शिंशुमारश्चेति शतं मूलमूर्त्या समन्वितम् ।
आहूय पूजयेदेताः स्नानीयकलशे बुधः ॥ ४४॥

कलशसङ्ख्या —

नैवेद्यप्रोक्षणार्थं च पञ्चपात्रप्रपूरणे ।
पानीयार्थं पृथक्चैकं कलशत्रितयं भवेत् ॥ ४५॥
पञ्चैते कलशाः प्रोक्ताः गन्धार्थं द्वौ पुनः पृथक् ।
सम्भवे सप्त कलशाः पञ्च वाथ त्रयो द्वयम् ॥ ४६॥
असम्भवे च सर्वेषां भिन्नपात्राणि कारयेत् ।
एकस्माद्वाऽपि पश्चात्तं कलशं पूजयेद् बुधः ॥ ४७॥

कलशमन्त्रादि —

इमं मे चाथ गङ्गे चेत्यादिमन्त्रानुदीरयेत् ।
सर्वक्षेत्रेति मन्त्रेण कलशं प्रार्थयेत्ततः ॥ ४८॥

शङ्खचक्रादिमुद्राप्रदर्शनम् —

शङ्खचक्रगदपद्मधेनुतार्क्ष्यादिमुद्रिकाः ।
प्रदर्श्य मूलमन्त्रं च द्विषड्वारं जपेत्ततः ॥ ४९॥

शङ्खपूजा —

कलशोदकपूर्णं तु ततः शङ्खं प्रपूजयेत् ।
त्वं पुरेत्याधिकान् मन्त्रान् पठित्वा प्रार्थयेत्ततः ॥ ५०॥
जपेत्त्रिः शङ्खगायत्रीं पुनः[5] शङ्खादिमुद्रिकाः ।
दर्षयित्वाऽष्टवारं च मूलमन्त्रं जपेत्ततः ॥ ५१॥

अर्घ्यादिकलशस्थापनम् —

पात्राण्यासादयेत्पूर्वं पञ्च पूजाविधौ सदा ।
अर्घ्यं वायुपदे प्रोक्तं नैरृत्यां पाद्यमेव च ॥ ५२॥
ईशे त्वाचमनीयं च स्नानीयं चाग्निकोणके ।

---

[5] पाञ्चजन्याय विद्महे महोदराय धीमहि । तन्नः शङ्खः प्रचोदयात् ॥ — इति शङ्खगायत्री ॥

मध्ये द्वे सर्वपात्राणां शुद्धतोयेन पूरयेत् ॥ ५३॥
एकं स्यान्मधुपर्केऽन्यत्पुनराचमने तथा ।
निक्षिपेद्गन्धतुलसीपुष्पादीनि यथाविधि ।
अर्घ्ये तु दानमुद्रा स्यात्पाद्ये जाञ्जलिमुद्रिका ।
गोकर्णाकृतिराचामे मधुपर्के तु सूकरी ।
मध्ये तु पुनराचामे हंसमुद्रा प्रकीर्तिता ॥ ५४॥

पूजाद्रव्यप्रोक्षणम् —

तुलसीदलयुक्तेन शङ्खतोयेन पूजकः ।
पूजाद्रव्याणि सर्वाणि प्रोक्ष्य पीठं प्रपूजयेत् ॥ ५५॥

पीठपूजा —

पूज्यश्च[6] भगवान्नित्यमित्यध्याये यथाक्रमं ।
श्रीमध्वगुरुणा प्रोक्तं पीठावरणपूजनम् ॥ ५६॥
सूत्रत्वात्तस्य बोधार्थं क्वचिद्वक्ष्यामि विस्तरम् ।
पीठपूजां विधायाथ तत्रावाह्येति[7] सूत्रतः ॥ ५७॥

आवाहनविधिः —

हरिमावाहयेद्भक्त्या तद्विधिः प्रोच्यतेऽधुना ।
अधोमुखं हृत्कमलं वायुबीजेन चोन्मुखम् ॥ ५८॥
कुर्यात्ततोऽस्य मुकुलं ज्ञानार्केण विकासयेत् ।
तत्कर्णिकास्थितं देवं नारायणमजं विभुम् ॥ ५९॥
उद्यद्भास्वदिति ध्यात्वा सपुष्पतुलसीकरः ।
कृताञ्जलिपुटो भूत्वा आत्मेत्येकामृचं पठेत् ॥ ६०॥
मूलमन्त्रं ततो जप्त्वा यद्यात्मार्थं प्रपूजयेत् ॥ ६१॥
“एह्येहि मम हृत्पद्मस्थितश्रीपुरुषोत्तम ।
आवाहयामि पीठे त्वां प्रतिमायां रमापते” ॥ ६२॥
द्विरुच्चार्यैवमावाह्य तमावाहनमुद्रया ।
ततस्तु प्रार्थनामुद्रां विधाय प्रार्थयेद्धरिम् ॥ ६३॥
“यागावसानपर्यन्तमत्र स्थित्वा जनार्दन ।
भक्तस्य मम पूजां त्वं गृहीत्वा पाहि मां विभो” ॥ ६४॥
सम्प्रार्थ्यैवं स्वबिम्बाख्यं मुद्रा आवाहनादिकाः ।

[6] तन्त्रसारसङ्ग्रहे ४९.५८
[7] तन्त्रसारसङ्ग्रहे १.५८

षण्मूलमन्त्रपूर्वं तु तं तमर्थमुदीरयेत् ॥ ६५ ॥

षण्मुद्राप्रदर्शनम् —

आवाहनं स्थापनं च सान्निध्यं सन्निरोधनम् ।
सम्मुखीकरणं चैव ह्यवगुण्ठनमेव च ॥ ६६ ॥
प्रदर्श्यैताश्च षण्मुद्राः स्नानार्थं प्रार्थयेत्ततः ।

परार्थावाहने विशेषः —

परार्थं यदि पूजा स्यात्सूर्याग्न्यन्तर्गतं हरिम् ॥ ६७ ॥
आवाह्य पूर्ववत्कार्यं सर्वमावाहनादिकम्

स्नानार्थं प्रार्थना स्नानपीठे स्थापनम् च —

एहि श्रीभगवन्विष्णो स्नानार्थं मज्जनालयम् ॥ ६८ ॥
सम्प्रार्थ्यैवमिदं विष्णुरित्यृचा पादुकार्पणम् ।
स्नानालयं समायान्तं ध्यात्वा नारायणं प्रभुम् ॥ ६९ ॥
स्थापयेत्स्नानपीठे तं भद्रं कर्णेभिरित्यृचा ।
पुनस्तत्रापि षण्मुद्राः कुर्यादावाहनादिकाः ॥ ७० ॥

अर्घ्याद्युपचारसमर्पणम् —

ततोऽर्घ्यं मूलमन्त्रेण पाद्यमाचमनीयकम् ।
मधुपर्कं तथो दद्यात्पुनराचमनं ततः ॥ ७१ ॥

पञ्चामृताभिषेकः —

आप्यायस्व दधिक्राव्णो धृतं मिमिक्ष इत्यृचः ।
मधुवाता तथा स्वादुरिति मन्त्रान्समूलकान् ॥ ७२ ॥
क्रमेणैतान्पठन्पञ्चामृतेन स्नापयेद्धरिम् ।
पयो दधि घृतं क्षौद्रं शर्करा पञ्चमामृतम् ॥ ७३ ॥

शुद्धोदकस्नानम्, अभिषेकमन्त्राश्च —

ततः शुद्धोदकस्नानं कारयेत्परमात्मनः ।

पौरुषं[8] वैष्णवं[9] घार्मं[10] पवस्वेति[11] त्रिवर्गकम् ॥ ७४ ॥
य इन्द्रोरेकवर्गश्च[12] समुद्रादूर्मिरेव[13] च ।
जितन्त[14] इति च स्तोत्रं पठन्संस्नापयेद्धरिम् ॥ ७५ ॥

वस्त्राद्युपचारसमर्पणम् —

ततोऽङ्गमार्जनं वस्त्रं पीतं च परिधानकम् ।
ततः सर्वाङ्गभूषाश्च नूपुराद्याः किरीटकम् ॥ ७६ ॥
धात्वैव भूषणं किञ्चिन्नवमप्यर्पयेत्सुधीः ।
यज्ञोपवीतं दत्वा तमासने चोपवेशयेत् ॥ ७७ ॥

प्रतिमायां तत्त्वन्यासादि —

अभिषेकात्पुरा वाऽपि पश्चाद्वा परमात्मनि ।
तत्त्वन्यासादि ध्यानान्तं कृत्वा पूजां समारभेत् ॥ ७८ ॥
आसनस्थं हरिं स्पृष्ट्वा मूलद्वादशकं जपेत् ।

गन्धपुष्पादिसमर्पणम् —

अर्पयेद्गन्धपुष्पाणि मूलेन तुलसीं तथा ॥ ७९ ॥

आयुधपूजा, आभरणपूजा च —

ततश्चक्रायुधादीनि पूजयेत्क्रमशो दश ।
दुर्गा चक्राधिदेवी स्याच्छ्रीश्च शङ्खाधिदेवता ॥ ८० ॥
वायुर्गदाधिदेवः स्याद्भूमिः पद्माभिमानिनी ।
दुर्गैव खड्गदेवी स्याच्छार्ङ्गं चैव सरस्वती ॥ ८१ ॥
पञ्च प्राणाः पञ्च बाणा विरिञ्चः कौस्तुभात्मकः ।
श्रीरेव वनमालायां लक्ष्मीः श्रीवत्ससम्स्थिता ॥ ८२ ॥

आवरणपूजा —

---

8 पुरुषसूक्तम् ऋग्वेद १०.९
9 विष्णुसूक्तम् ऋग्वेद १.१५४
10 ऋग्वेद १०.११४
11 ऋग ९.६७.१६ ३२
12 ऋग्वेद ९.११४
13 ऋग्वेद ४.११४
14 पञ्चरात्रागमे नारायणषाक्षरेकल्पे पञ्चाध्यायत्मकम् स्तोत्रम्

अथावरणपूजायां लक्ष्मीं वामे हरेर्यजेत् ।
धरान तु पश्चिमे पार्श्वे ततः पूर्वादिदिक्षु च ॥ ८३ ॥
क्रुद्धोल्काय महोल्काय वीरोल्काय नमस्ततः ।
द्यूल्काय च नमस्कुर्यादुदीच्यां दिशि च क्रमात् ॥ ८४ ॥
सहस्त्रोल्कायेति चतुर्नम अग्न्यादिकोणतः ।
पुनः पूर्वादिकाष्ठासु वासुदेवाधिकान्यजेत् ॥ ८५ ॥
मायं जयां कृतिं शान्तिं यजेत्कोणेषु च क्रमात् ।
केशवाध्यास्ततो मूर्तिर्द्वादश क्रमतो यजेत् ॥ ८६ ॥
दिशि द्वे द्वे कोण एक ईशे दामोदरो भवेत् ।
सङ्कर्षणादिकृष्णान्ता मूर्तयो द्वादश क्रमात् ॥ ८७ ॥
मत्स्यादिमूर्तयोऽप्येवं द्वादशान्तं क्रमाद्यजेत् ।
ऐशान्यां विश्वरूपः स्यात्क्रमेणानेन पूजयेत् ॥ ८८ ॥
सर्वदिक्षु पुरश्चापि ह्यनन्ताधीन् सभार्यकान् ।
इन्द्रादींश्च सपत्नीकान् परिग्रहयुतानपि ॥ ८९ ॥
पूजयेत्क्रमशो धीमान् स्वासु दिक्षु स्थितान् बहिः ।
पश्चात्पुरस्ताच्छेषं च विधिं चैव सभार्यकम् ॥ ९० ॥

द्वारपालकपूजनम् —

पूजयित्वा ततः पूज्या द्वादशद्वारपालकाः ।
प्रथमो वज्रनाभश्च हरीशश्च ततः परम् ॥ ९१ ॥
तृतीयो गाङ्गतनयस्ततः शङ्खनिधीश्वरः ।
जयश्च विजयः पश्चाद्धाता सप्तमको मतः ॥ ९२ ॥
विधाता च ततो भद्रः सुभद्रोऽथामृतेश्वरः ।
विरूपाक्षोऽन्तिमश्चैव नमश्शब्देन पूजयेत् ॥ ९३ ॥

धूपदीपसमर्पणम् —

वनस्पत्युद्भवेत्यादिमन्त्रैर्मूलपुरस्सरैः ।
धूपं दत्वा ततो दीपं दद्यान्मूलमुदीरयत् ॥ ९४ ॥

नैवेद्यसमर्पणविधिः —

साज्यं त्रिवर्तिमन्त्रेण ततो नैवेद्यमर्पयेत् ।
देवस्याग्रे शुभं शोध्य श्रीबीजं तत्र संलिखेत् ॥ ९५ ॥
नैवेद्यमुपरिस्थाप्य शुद्धतोयेन प्रोक्षयेत् ।

सौवर्णैरिति मन्त्रेण मूलमन्त्रेण मन्त्रयेत् ॥ ९६॥
अमृतस्त्राविर्णीं धेनुं नैवेद्योपरि चिन्तयेत् ।
धेनुमुद्रां प्रदर्श्योच्चां सुरभ्यै नम इत्यपि ॥ ९७॥
हुम्फडन्तं सह स्वाहेत्युक्त्वा मुद्रां सुदर्शनीम् ।
गारुडीं चाथ सन्दर्श्य गृहीत्वाऽत करे जलम् ॥ ९८॥
परिषिञ्चामि सत्यं त्वर्तेनेति च क्रमाद्वदेत् ।
परितः सिञ्चयेत्तोयन्तत आपोशनं क्षिपेत् ॥ ९९॥
सुधारसं सुविपुलमापोशनमिदं तव ।
गृहाण कलशानीतंयथेष्तमुपभुज्यताम् ॥ १००॥
इति मन्त्रमुधीर्यात धेवधक्षिहणहस्तके
लक्षम्या प्रदीयमानं च सुधारसमयं शुभम् ॥ १०१॥
आपोशनमिदं ध्यात्वाऽमृतोपस्तरणमसि ।
इत्युक्त्वाऽऽपोशनोच्छिष्टं जलं पात्रान्तरे क्षिपेत् ॥ १०२॥
ततः प्राणात्मने पूर्वमुक्त्वा नारायणाय च ।
स्वाहाम्तमिति पञ्चैता आहुतीः क्रमशो वदन् ॥ १०३॥
शाङ्गतोयं क्षिपेत्पात्रे प्रत्याहुत्येकपात्रकम् ।
मधुवाता तता स्वादु भोजं त्वेति पठेदृचः ॥ १०४॥
पानीयमर्पयेत्पश्चात्ततो जवनिकां क्षिपेत् ।
भुञ्जानं चिन्तयन्मुलं जपेदष्टोत्तरं शतम् ॥ १०५॥
उत्तरापोशनं पश्चादमृतापिधानमसि ।
इत्युक्त्वाऽपोशनोच्छिष्टजलं पात्रान्तरे क्षिपेत् ॥ १०६॥

गण्डूषादीसमर्पणम् ताम्बूलम् दक्षिणादिकम् च —

वामे गण्डूषपात्रं स्यात्तत्र गण्डूषमर्पयेत् ।
हस्तप्रक्षालनं दत्वा पश्चादाचमनं क्षिपेत् ॥ १०७॥
मूलेन पुष्पत्रितयमर्पयित्वा ततो वदेत् ।
“पूगीफलं सखदिरचूर्णकर्पूरसम्युतम् ॥ १०८॥
नागवल्लीदलैर्युक्तं ताम्बूलं गृह्यतां विभो” ।
इति ताम्बूलकं दद्यान्नाकस्येति च दक्षिणाम् ॥ १०९॥

पुनर्धूपदीपसमर्पणम् —

जयत्यादि पठन्मन्त्रान्पुनर्धूपं समर्पयेत् ।

नीराजनम् —

अर्चतेत्यादिकान्मन्त्रान्पठन्नीराजयेद्धरिम् ॥ ११० ॥
पुष्पाण्यष्टौ समर्प्याथ मूलमन्त्रेण वैष्णवः ।

मन्त्रपुष्पाञ्जलिः —

वेदमन्त्रैश्च पौराणैरर्पयेत्कुसुमाञ्जलिम् ॥ १११ ॥

चामाराद्युपचारसमर्पणम् —

चामरं दर्षणं छत्रं वाहनादि निवेदयेत् ।
महाराजोपचारांश्च गीतवादित्रनृत्यकान् ॥ ११२ ॥
सर्वं निवेदयेद्भक्त्या मूलमन्त्रेण साधकः ।

शङ्खभ्रामणम् —

ततः शुद्धेन तोयेन शङ्खमापूर्य मुद्रिकाः ॥ ११३ ॥
धेन्वादीः सम्प्रदर्श्याथ तोयं शङ्खगतं स्पृशेत् ।
अष्टवारं जपेन्मूलं भ्रामयेत्त्रिः प्रदक्षिणम् ॥ ११४ ॥
शङ्खोदकं तु तत्पात्रे स्थापयित्वा पृथक् सुधीः ।

प्रदक्षिणनमस्काराः, सूक्तपाठश्च —

प्रदक्षिणनमस्कारान्सूक्तपाठं ततश्चरेत् ॥ ११५ ॥
आरुह्य वेदिकां पश्चात्पूजासाद्गुण्यकारकम् ।
मूलमन्त्रं हरिं ध्यायन् जपेदष्टोत्तरं शतम् ॥ ११६ ॥

रमाब्रह्मादिनिवेदनम् —

रमाब्रह्मादिदेवानां दत्वा तीर्थादिकं बलिम् ।

पुनः तत्वन्यासमातृकान्यासौ —

तत्त्वन्यासान् मातृकाश्च पुनर्मूर्तौ समाचरेत् ॥ ११७ ॥

प्रत्यावाहनम् —

पुनर्ध्यात्वा हरिं देवमात्मा देवेत्यृचं पठेत् ।
तत आवाहनीं मुद्रां व्युत्क्रमेण विधाय च ।
एह्येहीति पुनः प्रोच्य पुनरावाहयेद्धृदि ।
तथैव परपूजायां रव्यादौ तं निधापयेत् ॥ ११८ ॥
"याचेऽहं त्वां हृषीकेश नमामि पुरुषोत्तम ।
हृदि मे कुरु संवासं श्रिया सह जगत्पते" ।
इति प्रार्थ्य हरिं पश्चाद्विदध्यात्तत्त्वमातृकाः ॥ ११९ ॥

पूजासमर्पणविधिः —

ध्यात्वा समर्पयेद्विष्णुं यस्य स्मृत्येति मन्त्रतः ॥ १२० ॥

वैष्णवाराधनम् तीर्थादिग्रहणम् —

तीर्थप्रसादगन्धादीन् दत्वा विष्णुपराय च ।
ततः स्वयं तु गृह्णीयाद्भक्त्या नत्वा हरिं स्मरन् ॥ १२१ ॥

फलश्रुतिः —

पद्यपाठे मनुष्याणां श्रमो नातिभवेदिति ।
तन्त्रसारोक्तपूजायां पद्यमालेयमीरिता ।
अनेन भगवान् विष्णुः प्रीतो भवतु सर्वदा ॥ १२२ ॥
प्रमादतो निरोधाद्वा हरेः पूजा भवेन्न चेत् ।
पठनात्पद्यमालायाः नरः पूजाफलं लभेत् ॥ १२३ ॥
इति श्रीजयतीर्थार्यभिक्षुणा रचिता सती ।
तन्त्रसारोक्तपूजानुसारिणी पद्यमालिका ॥ १२४

इति श्रीमज्जयतीर्थश्रीचरणविरचिता पद्यमाला ।

॥ भारतीरमणमुख्यप्राणान्तर्गत श्री कृष्णार्पणमस्तु ॥